दंपरिधत्स्ववासः ॥ इतिमंत्रेणोत्तरीयंदद्यात् ॥ अथकन्यापितावधूवरयोः परस्परंसमंजेथाइतिब्रू
यात् ॥ अथवरः ॥ समंजंत्वितिमंत्रस्यआथर्वणऋषिःअनुष्टुप्छंदः लिंगोक्तादेवतासमंजनेविनि
योगः ॥ ॐ समंजंतुविश्वेदेवाः समापोहृदयानिनौ ॥ संमातरिश्वासंधातासमुदेष्ट्रीदधातुनौ ॥ इति
मंत्रंपठित्वावध्वाःसंमुखो भवेत् ॥ अथकन्यादानसंकल्पः ॥ अथदाताबद्धशिखःशुचिर्दर्भपाणिः
स्वदक्षिणेपत्न्यासह वरदक्षिणपार्श्वभागेशुभासनउदङ्मुखउपविश्याचम्य प्राणानायम्य शंखस्थदूर्वा
क्षतफलपुष्पचंदनतुलसीदलजलान्यादाय ॥ ॐ अस्यश्रीमदनंतवीर्यस्यादिनारायणस्याचिंत्यापरि
मितशक्त्याध्रियमाणस्यमहाजलौघमध्येपरिभ्रममाणानामनेककोटिब्रह्मांडानामेकतमे व्यक्ताव्यक्तम
हदहंकारपृथिव्यप्तेजोवाय्वाकाशाद्यावरणैरावृतेऽस्मिन्महतिब्रह्मांडमध्ये आधारशक्त्यादिश्रीवराह
कूर्मानंताष्टदिग्गजोपरिप्रतिष्ठितस्य अतलवितलसुतलतलातलरसातलमहीतलपातालोपरितले
भुवर्लोकस्वर्लोकमहर्लोकजनलोकतपोलोकसत्यलोकषट्कस्याऽधोभागेमहाकालादिफणिराजशेषस्य

सहस्रफणामंडलमण्डितेदिग्दंतिशुंडादंडदंडितेलोकालोकाचलेनवलयिते लवणेक्षुसुरासर्पिर्दधिक्षी
रोदकार्णवपरिवृतेजंबूप्लक्षशाल्मलिकुशक्रौंचशाकपुष्करसप्तद्वीपद्वीपितेइंद्रद्वीपकशेरुताम्रगभस्ति
नागसौम्यगंधर्वचारणभारतेतिनवखंडखंडात्मके महासरोरुहाकारपंचाशत्कोटियोजनविस्तीर्णभूमं
डले सुमेरुनिषदहेमकूटरजतकूटचित्रकूटाम्रकूटश्रीकूटकिष्किंधात्रिकूटसह्याद्रिहिमवद्विंध्याचलानां
हरितवर्षकिंपुरुषयोश्चदक्षिणेसहस्रयोजनविस्तृतेकर्मभूमौमलयाचलादुत्तरेस्वर्णप्रस्थचांद्रशुक्लप्रवर्त
करमणकवाह्लीकपंचजन्यसिंहललंकेतिनवोपद्वीपद्वीपिते भरतवर्षेभरतखंडेजंबूद्वीपेलंकायाःस्वा
म्यवंतिकुरुक्षेत्रादिसमभूमध्यरेखायाः पश्चिमादिदिग्भागे श्रीशैलाद्वायव्यादिदेशे श्रीकृष्णागोदाव
र्योर्मध्यादिदेशे श्रीकृष्णावेण्योरुत्तरतीरे गोदावर्या दक्षिणे उत्तरेवा तीरेचंपकारण्यबदरिकारण्यनै
मिषारण्यकामिकारण्यदंडकारण्यमदाहारण्यद्वैतारण्यसैंधवारण्यपुण्यकारण्यानामन्यतमेदेशे अंगवं
गकालिंगकांबोज सौवीरसौराष्ट्रमहाराष्ट्रवर्गलोत्कलमगधमालवनेपालकेरलचोलगौडमलयपांचाल

सिंहलमत्स्यद्रविडकर्नाटकशूरसेनकोंकणवेंकपाण्डचपुलिंदांध्रद्रौणदशार्णविदर्भमैथिलकेकयको
शलकुन्तलमैन्ध्रुवजांगलसिन्धुसुह्मपुण्ड्रमद्रमध्यदेशकाश्मीरपारसिकगांधारबाह्लीकानर्त्तप्रभृतिनाना
विधदेशान्यतमेदेशे सकलजगत्स्रष्टुः परार्धद्वयजीविनोब्रह्मणोद्वितीयेपरार्धेप्रथमपंचाशदतीतेद्विपंचा
शन्मध्येप्रथमदिवसे अह्नद्वितीयेयामेतृतीयेमुहूर्तेसप्तमवैवस्वतमन्वंतरेअष्टाविंशतिमेकलियुगे पंचा
शदुत्तरेत्रियुगे शतसहस्रवर्षेयामेचांद्रसावनसौरादिमासभ्रमितप्रभवादिषष्टिसंवत्सराणांमध्ये अमुकसं
वत्सरेअमुकायनेअमुकर्तौअमुकमासे अमुकपक्षेअमुकतिथौअमुकवासरेअमुकयोगे अमुककरणे
अमुकमुहूर्तेएवंगुणविशिष्टायांशुभपुण्यतिथौ ॥ ममइहजन्मनिजन्मांतरेचबाल्ययौवनवार्धकेषुरह
सिप्रकाशेचमनोवाक्कायकृतज्ञाताज्ञातावृत्तानावृत्तमहापातकादिप्रकीर्णकान्तसमस्तदुरितक्षयद्वारा
वालुकादिसप्तर्षिमण्डलपर्यन्तं कृतराशेर्वर्षसहस्रावसाने एकैकवालुकापकर्षक्रमेणसर्वराश्यपकर्षसंमि
तकाले ब्रह्मलोकेनिवाससिद्धयर्थं त्रिगुणीकृताग्निष्टोमातिरात्रशतलाभसिद्धयर्थं तिलैःसूर्यमंडलपर्यं

तंकृतराशेर्वर्षसहस्रावसाने एकैकतिलापकर्षक्रमेणसर्वराश्यपकर्षसंमितकाले ब्रह्मलोकेनिवाससिद्ध्यर्थंयोजनपरिमितभूमण्डले वृषलोमभिर्वर्षत्रयावसाने एकैकलोमापकर्षक्रमेण सर्वराश्यपकर्षसंमितकालेब्रह्मलोकेनिवाससिद्ध्यर्थं ममसमस्तपितॄणां निरतिशयसानंदब्रह्मलोकावाप्त्यादिश्रुतिस्मृतिपुराणेतिहासकन्यादानकल्पोक्तफलावाप्तये अनेनवरेणाऽस्यांकन्यायामुत्पादयिष्यमाणसंतत्यामयासह( ब्राह्मविवाहपक्षे ) द्वादशावरान्द्वादशापरान् ( दैवविवाहपक्षे ) दशावरान्दशापरान् ( प्राजापत्यविवाहपक्षे ) अष्टावरानष्टापरान् पुरुषान्पवित्रीकर्तुमात्मनश्चश्रीलक्ष्मीनारायणप्रीत्यर्थंब्राह्मविवाहविधिनाकन्यादानमहंकरिष्ये ॥ इत्युच्चार्य ततःवरहस्तेसुप्रोक्षितादिकरणंकुर्यात् ॥ तद्यथा ॥ शिवाआपः संतु संतुशिवाआपःसौमनस्यमस्तु अस्तुसौमनस्यं अक्षतंचारिष्टंचास्तु अस्त्वक्षतमरिष्टंच ॥ आपःपांतुसुप्रोक्षितमस्तु । गंधाःपांतुसुमंगल्यंचास्तु अक्षताःपांतुआयुष्यमस्तु । पुष्पंपातुसौश्रियमस्तु । यत्पापंरोगमशुभमकल्याणंतद्दूरेप्रतिहतमस्तु । इतिवरंसंपूज्यगोत्रोच्चारं

कुर्यात् ॥ तद्यथा ॥ स्वस्तिश्रीनंदनंदनचरणकमलभक्त्यनुरागधर्ममूर्तिधर्मावतारश्रीमदग्र्यकु
लकमलप्रकाशमहन्मुकुटमणिसभाशृंगारसद्विद्याविनोदकृतकीर्तिविस्तारितस्यामुकप्रवरान्वितस्या
मुकसगोत्रस्यअमुकशर्मणःप्रपौत्रायअमुकप्रवरान्वितामुकसगोत्रस्यामुकशर्मणःपौत्रायअमुकप्रवरा
न्वितामुकसगोत्रस्यामुकशर्मणःपुत्रायामुकप्रवरान्वितामुकसगोत्रायामुकशर्मणे श्रीधररूपिणेव
राय ॥ ततःकन्यायाश्चगोत्रोच्चारः ॥ स्वस्तिश्रीनंदनंदनचरणकमलभक्त्यनुरागधर्ममूर्तिधर्मावतार
श्रीमदग्र्यकुलकमलप्रकाशमहन्मुकुटमणिसभाशृंगारसद्विद्याविनोदकृतकीर्तिविस्तारितस्यामुकप्र
वरान्वितामुकसगोत्रस्यअमुकशर्मणःप्रपौत्रींअमुकप्रवरान्वितामुकसगोत्रस्यामुकशर्मणःपौत्रीममुक
प्रवरान्वितामुकसगोत्रस्यअमुकशर्मणः पुत्रीममुकप्रवरान्वितामुकसगोत्राममुकनाम्नींश्रीरूपिणींइमां
कन्यां० ॥ इत्येकःपर्यायः ॥ एवमेवपुनःपर्यायद्वयमुक्त्वा ॥ पुनः अमुकप्रवरान्वितामुकसगोत्रोत्प
न्नायशुक्लयजुर्वेदांतर्गतमाध्यंदिनशाखाध्यायिनेअमुकशर्मणेश्रीधररूपिणेवराय अमुकप्रवरान्विता

मुकसगोत्रोत्पन्नाममुकनाम्नीं श्रीरूपिणीं यथाशक्त्यलंकृतां उपकल्पितोपस्करसहितां कुलशीलसौ
भाग्यसामुद्रिकलक्षणलावण्ययुक्तां सावयवामारोग्यां कांचनकुंडलकंकणनूपुरकटिसूत्रकेयूरांगदांगु
लीयभूषणभूषितां यवनालिहारकरदीपितांभ्रमरमधुपुष्पमालालंकृतांहरिद्राकुंकुमकज्जलतांडपत्रस
हितां कर्पूरागरुगोरोचनयक्षकर्दमदशगंधादिद्रव्यवासितां मालामंडितां दशदोषरहितां नवविधभो
गछत्रोपानद्वस्त्राशनरौप्यकमंडलुताम्रकांस्यपात्रगोदासीसंपुटसौवर्णमुद्रिकाकांचनदीपिकापूगीफल
श्रीखंडप्रत्युपहारादर्शसमन्वितां मदनफलबद्धहस्तां त्रिमातुलशुद्धांदशपुरुषविख्यातांप्रजापतिदै
वत्यां इमांकन्यां प्रजोत्पादनार्थंभार्यात्वेनतुभ्यमहंसंप्रददे ॥ इतिउच्चार्यजामातुर्दक्षिणकरोपरिक
न्यादक्षिणकरंनिधाय ॐ दाताहंवरुणोराजाद्रव्यमादित्यदैवतम् ॥ वरोऽसौविष्णुरूपेणप्रतिगृह्णा
त्वयंविधिः ॥ इति पठित्वासंकल्पजलंकन्यादक्षिणहस्ताद्वरदक्षिणहस्ते दद्यात् ॥ तदवसरेकन्यामा
तापिमयापिदत्ताइतिब्रूयात् ॥ ततोवरः ॐ स्वस्तिइतिब्रूयात् ॥ ततःवरःकन्यायादक्षिणांसमभि

मृह्य ॐ द्यौस्त्वाददातुपृथिवीत्वाप्रतिगृह्णातु ॥ इत्यनेनमंत्रेणप्रतिगृह्णाति ॥ ततःकन्यापितावधू
वरौप्रार्थयते ॥ तत्रादौवरंप्रार्थयते ॥ कन्यांलक्षणसंपन्नां कनकाभरणैर्युताम् ॥ दास्यामिविष्णवेतुभ्यं
ब्रह्मलोकजिगीषया ॥ ऋषयःसर्वभूतानां साक्षिणःसर्वदेवताः ॥ इमांकन्यांप्रदास्यामिपितॄणांता
रणायच ॥ कन्यादानं महादानं सर्वदानेषुदुर्लभम् ॥ तदद्यदैवयोगेनत्वंगृहाणवरोत्तम ॥ गौरींक
न्यामिमांविप्रयथाशक्तिविभूषिताम् ॥ गोत्रायशर्मणेतुभ्यंदत्तांविप्रसमाश्रय ॥ ममवंशसमुद्भूता
अष्टवर्षाणिपालिता ॥ तुभ्यंविप्रमयादत्तापुत्रपौत्रप्रवर्धिनी ॥ अथकन्यांईश्वरंचप्रार्थयते ॥ कन्ये
ममाग्रतोभूयाः कन्येमेदेविपार्श्वयोः ॥ कन्येमेपृष्ठतोभूयास्त्वद्दानान्मोक्षमाप्नुयाम् ॥ त्रैलोक्यनाथ
देवेशसर्वभूतदयानिधे ॥ दानेनानेनमेप्रीतोभवशांतिंप्रयच्छमे ॥ श्रुत्वाकन्याप्रदानंचपितरःप्रपि
तामहाः ॥ विमुक्ताःसर्वपापेभ्योब्रह्मलोकंव्रजंतिते ॥ कन्यांयेतुप्रयच्छंतियथाशक्तिस्वलंकृताम् ॥
ब्राह्मणायद्विजश्रेष्ठा ब्रह्मलोकंव्रजंतिते ॥ तिलराशिःकृतोयावद्दिवाकरसमुच्छ्रितः ॥ वर्षांतेगृह्यते

तस्य तिलराशेस्तुयावता ॥ अक्षय्यंलभतेतावद्ब्रह्मलोकस्यनिश्चितम् ॥ यावंतिसंतिलोमानिकन्या
याश्वतनौपुनः ॥ तावद्वर्षसहस्राणिरुद्रलोकेमहीयते ॥ वालुकायाःकृतोराशिर्यावत्सप्तर्षिमंडलम् ॥
गतेवर्षसहस्रेतुलक्षमेकंविशीर्यते ॥ क्षयश्चदृष्टस्तस्यापिकन्यादानेनविद्यते ॥ ज्योतिष्टोमातिरात्रा
णांशतंशतगुणात्कृतम् ॥ प्राप्नोतिकन्यकांदत्त्वाहोममंत्रैश्चसंस्कृताम् ॥ कन्यारत्नमिदंदानंमयादत्त
तवानघ ॥ स्वदेशेपरदेशेवापरिपाल्याकुलोचिता ॥ धर्मार्थकामकैःकार्यैर्यानरैःसाध्यतेपरः ॥ धर्म
स्त्वयानयासार्धमाचर्तव्यःसवैचिरम् ॥ धर्मेचार्थेचकामेचत्वयेयमतिचारतः ॥ नत्याज्याज्याहुति
रिवभूतौसंसारभूतिदा ॥ यस्त्वयाधर्मश्चरितःकर्त्तव्यश्चानयासह ॥ धर्मेचार्थेचकामेच त्वयेयंनातिच
रितव्या ॥ वरः ॥ अहंनाति च रामीहयदुक्तंभवताततः ॥ धर्मार्थकामकैःकार्यैर्देहाच्छायेवसर्वदा ॥
नातिचरामीतिवरोवदेत् ॥ अथदाता ॥ कृतैतत्कन्यादानप्रतिष्ठासिद्ध्यर्थमिमांयथाशक्तिस्वर्णमयीं
दक्षिणांतुभ्यमहंसंप्रददे नमम ॐ स्वस्तीतिवरोब्रूयात् ॥ ततःदशमहादानानिदद्यात् ॥ कन्यार्थेक

नकंधेनुर्दासीरथमहीगृहम् ॥ महिष्यश्वगजाःशय्यामहादानानिवैदश ॥ दाताजलंगृहीत्वाकन्यादा
नसांगतासिद्धयर्थंसुवर्णादिदशदानैर्निष्क्रयीभूतंमनःसंकल्पितंद्रव्यं श्रीधररूपिणे वरायतुभ्यमहंसं
प्रददे ॥ तेनश्रीप्रजापतिदेवताप्रीयतांनमम ॥ इतिअशक्तिविषयः ॥ शक्तौतुयथाविभवंसंकल्पपूर्वं
काणिदशदानानिदद्यात् ॥ तत्रसुवर्णालंकारदानमंत्राः ॥ हिरण्यगर्भसंभूतंसौवर्णचांगुलीयकम् ॥ सर्व
प्रदंप्रयच्छामिप्रीणातुकमलापतिः ॥ क्षीरोदमथनेपूर्वमुद्धृतंकुंडलद्वयम् ॥ श्रियासहसमुद्भूतंददेश्रीः
प्रीयतामिति ॥ कांचनंहस्तवलयंरूपकांतिसुखप्रदम् ॥ विभूषणंप्रदास्यामि विभूषयतुतेसदा ॥ धेनु
दानमंत्रः ॥ यज्ञसाधनभूतायाविश्वस्याघौघनाशिनी ॥ विश्वरूपधरोदेवःप्रीयतामनयागवा ॥ दासी
दानमंत्रः ॥ इयंदासीमयातुभ्यंश्रीवत्सप्रतिपादिता ॥ सर्वकामकरीभोग्यायथेष्टंभद्रमस्तुमे ॥
रथदानमंत्रः ॥ रथायरथनाथायनमस्तेविश्वकर्मणे ॥ विश्वरूपायदेवायअरुणायनमोस्तुते ॥ मही
दानमंत्रः ॥ सर्वेषामाश्रयाभूमिर्वराहेणसमुद्धृता ॥ अनंतसस्यफलदाअतःशांतिंप्रयच्छमे ॥ गृहदान

मंत्रः ॥ इदंगृहंगृहाणत्वंसर्वोपस्करसंयुतम् ॥ तवविप्रप्रसादेनममसंतुमनोरथाः ॥ गृहंममविभूत्यर्थं गृहाणत्वंद्विजोत्तम ॥ प्रीयतांमेजगद्योनिर्वास्तुरूपीजनार्दनः ॥ महिषीदानमंत्रः ॥ महिषीयमरूपा त्वंविश्वामित्रविनिर्मिते ॥ पूजिताहरमेपापंसर्वदानफलप्रदे ॥ अश्वदानमंत्रः ॥ महार्णवसमुत्पन्नउच्चैः श्रवसपुत्रक ॥ मयात्वं विप्रमुख्यायदत्तोहयसुखीभव ॥ गजदानमंत्रः ॥ गजेंद्रमत्तमातंगदैत्यसैन्य विनाशक ॥ तवदानेनमेशांतिः सर्वदास्तुमहत्सुखम् ॥ शय्यादानमंत्रः ॥ यथानकृष्णशयनं शू न्यंसागरजातया ॥ तथाशय्याममाप्यस्त्वशून्याजन्मनिजन्मनि ॥ दशदानेतरदानान्यपिदेयानि ॥ तत्रादौताम्रपात्रदानमंत्रः ॥ परापवादपैशून्यादभक्ष्यस्यचभक्षणात् ॥ उत्पन्नपापंदानेनताम्रपात्रस्यन श्यतु ॥ कांस्यपात्रदानमंत्रः ॥ यानिपापानि काम्यानिकामोत्थानिकृतानिच ॥ कांस्यपात्रप्रदानेन ताानिनश्यंतुमेसदा ॥ रौप्यपात्रदानमंत्रः ॥ अगम्यागमनंचैवपरदाराभिमर्शनम् ॥ रौप्यपात्रप्रदाने नतत्पापंमेव्यपोहतु ॥ तांबूलदानमंत्रः ॥ पूरितंपूगपूगेननागवल्लीदलान्वितम् ॥ पूर्णंनचूर्णपात्रेणकृ

पूंरपिष्टकेनच ॥ सपूगखंडनंदिव्यंगंधर्वाप्सरसांप्रियम् ॥ ददेदेवनिरातंकंत्वत्प्रसादात्कुरुष्वमाम् ॥ दीपदानमंत्रः ॥ दीपस्तमोनाशयतिदीपः कांतिंप्रयच्छति ॥ तस्माद्दीपप्रदानेनममवंशप्रवर्धनम् ॥ इति ॥ अत्रअन्येपिकन्यापक्षिणोबांधवादयःयथासंभवंद्रव्यंवरवध्वर्थंप्रयच्छंति ॥ केचनैतद्दानंहोमां तेप्रयच्छंति ॥ तत्रदेशाचारतोव्यवस्था ॥ एतत्कन्यादानकर्मणःसांगतासिद्ध्यर्थंशतंब्राह्मणान्भोजयि ष्ये ॥ तेनश्रीकर्मांगदेवताप्रीयतांनमम ॥ ततःवधूवरपितरौएतत्कर्मणःसांगतासिद्ध्यर्थंनानानाम गोत्रेभ्योब्राह्मणेभ्योभूयसींदक्षिणांदातुमहमुत्सृजे ॥ इतिप्रत्येकंसंकल्प्यदक्षिणांदद्याताम् ॥ अथवरः कामस्तुतिंपठेत्ॐकोऽदात्कस्माऽअदात्कामोऽदात्कामायादात् ॥ कामोदाताकामःप्रतिग्रहीताका मैतत्तेश्रुनजावहै ॥ ॐ अथयदन्यद्ददातिकामेनैद्ददातीदंमप्यपुत्रासदितितत्प्रत्येतिकोदात्कस्माऽअ दात्कामोऽदात्कामायादात् ॥ कामोदाताकामःप्रतिग्रहीताकामैतत्ते ॥ इतिद्विवारंपठेत् ॥ ततोऽभि षेकः ॥ अथज्योतिर्विद्ब्राह्मणाश्चदूर्वाम्रपल्लवादिभिःवधूवरयोरुपरिसुवर्णाभिषेकंकुर्युः ॥ तत्रमंत्रः ॥

ॐ सयः कामयतेमहत्प्राप्नुयामित्युदगयनआपूर्यमाणपक्षे पुण्याहे द्वादशाहमुपसद्व्रतीभूत्वौदुंबरेकꣳ
सेचमसेवासर्वौषधंफलानीतिसंभृत्यपरिसमुह्य परिलिप्याग्निमुपसमाधायावृताज्यꣳसंस्कृत्यपुꣳसान
क्षत्रेणमन्थꣳसन्नीयजुहोति ॥ यावंतोदेवास्त्वयिजातवेदः ॥ तिर्यंचोघ्नंतिपुरुषस्यकामान् ॥ तेभ्योऽ
हंभागधेयंजुहोमितेमातृप्ताः कामैस्तर्पयंतुस्वाहा ॥ यातिरश्चीनिपद्यसेहंविधरणीइति ॥ तांत्वाघृत
स्यधारयायजेसꣳराधनीमहꣳस्वाहा ॥ प्रजापतेनत्वदेतान्यन्यइतितृतीयांजुहोति ॥ ज्येष्ठायस्वाहा
श्रेष्ठायस्वाहेति ॥ अग्नौहुत्वामन्थेस ꣳ स्रवमवनयतिप्राणायस्वाहावसिष्ठायैस्वाहेत्यग्नौहुत्वामन्थेस ꣳ
स्रवमवनयतिवाचेस्वाहाप्रतिष्ठायैस्वाहेत्यग्नौहुत्वामन्थेस ꣳ स्रवमवनयतिचक्षुषेस्वाहासंपदेस्वाहेत्य
ग्नौहुत्वामन्थेसꣳ स्रवमवनयतिश्रोत्रायस्वाहायतनायस्वाहेत्यग्नौहुत्वामन्थेस ꣳ स्रवमवनयति मनसे
स्वाहाप्रजात्यैस्वाहेत्यग्नौहुत्वामन्थेस ꣳ स्रवमवनयतिरेतसेस्वाहेत्यग्नौहुत्वामन्थेस ꣳ स्रवमवनयति
भूतायस्वाहेत्यग्नौहुत्वामन्थेसꣳस्रवमवनयतिभविष्यतेस्वाहेत्यग्नौहुत्वामन्थेसꣳस्रवमवनयतिविश्वाय

स्वाहेत्यग्नौहुत्वामन्थेस ꣳस्रवमवनयतिसर्वायस्वाहेत्यग्नौहुत्वा मन्थेस ꣳस्रवमवनयति ॥ पृथिव्यै
स्वाहेत्यग्नौहुत्वामन्थेस ꣳस्रवमवनयत्यन्तरिक्षायस्वाहेत्यग्नौहुत्वामन्थेस ꣳस्रवमवनयतिदिवेस्वाहे
त्यग्नौहुत्वामन्थेसꣳस्रवमवनयतिदिग्भ्यःस्वाहेत्यग्नौहुत्वामन्थेसꣳस्रवमवनयतिब्रह्मणेस्वाहेत्यग्नौहुत्वा
मन्थेसꣳस्रवमवनयतिक्षत्रायस्वाहेत्यग्नौहुत्वामन्थेसꣳ स्रवमवनयति ॥ भूःस्वाहेत्यग्नौहुत्वामन्थेसꣳ
स्रवमवनयति भुवःस्वाहेत्यग्नौहुत्वा मन्थेसꣳस्रवमवनयतिस्वःस्वाहेत्यग्नौहुत्वामन्थेसꣳस्रवमवनय
ति भूर्भुवःस्वःस्वाहेत्यग्नौहुत्वा मन्थेसꣳस्रवमवनयति ॥ अग्नयेस्वाहेत्यग्नौहुत्वामन्थेसꣳस्रवमवनय
तिसोमाय स्वाहेत्यग्नौहुत्वामन्थेसꣳस्रवमवनयति तेजसेस्वाहेत्यग्नौहुत्वा मन्थेसꣳस्रवमवनयतिश्रियै
स्वाहेत्यग्नौहुत्वामन्थेसꣳस्रवमवनयति लक्ष्म्यैस्वाहेत्यग्नौहुत्वामन्थेसꣳस्रवमवनयति सवित्रेस्वाहे
त्यग्नौहुत्वा मन्थेसꣳस्रवमवनयति सरस्वत्यैस्वाहेत्यग्नौहुत्वामन्थेसꣳस्रवमवनयति विश्वेभ्योदेवेभ्यः
स्वाहेत्यग्नौहुत्वा मन्थेसꣳस्रवमवनयति प्रजापतयेस्वाहेत्यग्नौ हुत्वा मन्थेसꣳस्रवमवनयति ॥ अथैन

विवा० मभिमृशति ॥ अमसिज्वलदसिपूर्णमसिप्रस्तब्धमस्येकसभमसिहिङ्कृतमसिहिङ्क्रियमाणमस्यु पद्ध०
॥१९॥ द्गीथमस्युद्गीयमानमसि श्रावितमसि प्रत्याश्रावितमस्यार्द्रेसंदीप्तमसि विभूरसिप्रभूरसिज्योतिरस्य
न्नमसिनिधनमसिसंवर्गोसीति ॥ अथैनमुद्यच्छति ॥ आमोऽस्यामꣳहितेमयि ॥ सहिराजेशानोऽधि
पतिः समाराजेशानोऽधिपतिं करोत्विति ॥ अथैनमाचामति ॥ तत्सवितुर्वरेण्यं ॥ मधुवाताऋता
यतेमधुक्षरंति सिंधवः ॥ माध्वीर्नःसंत्वोषधीः ॥ भूःस्वाहा ॥ भर्गोदेवस्यधीमहि ॥ मधुनक्तमुतोषसो
मधुमत्पार्थिवꣳरजः ॥ मधुद्यौरस्तुनःपिता ॥ भुवःस्वाहा ॥ धियो योनःप्रचोदयात् ॥ मधुमान्नोव
नस्पतिर्मधुमाँ २ अस्तुसूर्यः ॥ माध्वीर्गावोभवन्तुनः ॥ स्वःस्वाहेति सर्वांचसावित्रीमन्वाहसर्वांश्च
मधुमतीः सर्वाश्चव्याहृतीरहमेवेदꣳसर्वंभूयासंभूर्भुवःस्वःस्वाहेत्यंततआचम्य पाणीप्रक्षाल्य जघनेना ॥१९॥
ग्निप्राक्शिराःसंविशति ॥ प्रातरादित्यमुपतिष्ठते ॥ दिशामेकपुंडरीकमस्यहंमनुष्याणामेकपुंडरीकंभू
यासमितियथैतमेत्यजघनेनाग्निमासीनोवꣳशंजपति ॥ तꣳहैतमुद्दालकऽआरुणिर्वाजसनेयाययाज्ञव

ल्क्यायांतेवासिनउक्त्वोवाचापियएन ँ शुष्केस्थाणौनिषिंचेज्जायेरञ्छाखाः प्ररोहेयुःपलाशानीति ॥ एतमुहैववाजसनेयोयाज्ञवल्क्योमधुकायपैङ्ग्यायांतेवासिनउक्त्वोवाचापियएन ँ शुष्केस्थाणौ निषिंचेज्जायेरञ्छाखाःप्ररोहेयुःपलाशानीति ॥ एतमुहैवमधुकःपैङ्ग्यश्चूडाय भागवित्तयेऽन्तेवासिनउपत्वोवाचापियएन ँ शुष्केस्थाणौनिषिंचेज्जायेरञ्छाखाःप्ररोहेयुः पलाशानीति ॥ एतमुहैवचूडोभागवित्तिर्जानकयआयस्थूणायांतेवासिनउवाचापियएन ँ शुष्केस्थाणौनिषिञ्चेज्जायेरञ्छाखाः प्ररोहेयुः पलाशानीति ॥ एतमुहैवजानकिरायस्थूणःसत्यकामायजाबालायांतेवासिनउक्त्वोवाचापि यएन ँ शुष्केस्थाणौ निषिंचेज्जायेरञ्शाखाःप्ररोहेयुः पलाशानीति ॥ एतमुहैवसत्यकामोजाबालोंऽतेवासिभ्यउक्त्वोवाचापियएन ँ शुष्केस्थाणौनिषिञ्चेज्जायेरञ्छाखाः प्ररोहेयुः पलाशानीति ॥ तमेतन्नापुत्रायवानंतेवासिने ब्रूयाच्चतुरौदुंबरोभवत्यौदुंबरश्चमसऔदुंबरः स्रुवऔदुंबरइध्मऔदुंबर्यांउपमन्थिन्यौ ॥ दशग्राम्याणिधान्यानिभवंति ॥ व्रीहियवास्तिलमाषाअणुप्रियंगवो गोधूमाश्चमसूराश्चखल्वाश्चखल

 कुलाश्वतान्साधैंपिष्ट्वा दध्नामधुनाघृतेनोपासिंचत्याज्यंजुहोति ॥ सर्वेषांवाएषवें० कांड१४कं० ७ब्रा० 
 ९॥ सुवर्णाभिषेकोऽस्तु ॥ अथाभिषेकेपौराणमंत्राः ॥ सुरास्त्वामभिषिंचन्तुब्रह्मविष्णुमहेश्वराः ॥
वासुदेवोजगन्नाथस्तथासंकर्षणोविभुः ॥ प्रद्युम्नश्चानिरुद्धश्चभवंतुविजयायते ॥ आखंडलोऽग्निर्भगवा
न्यमोवैनिर्ऋतिस्तथा ॥ वरुणःपवनश्चैवधनाध्यक्षस्तथाशिवः ॥ ब्रह्मणासहिताःसर्वेदिक्पालाः पांतुते
सदा ॥ कीर्तिर्लक्ष्मीर्धृतिर्मेधापुष्टिःश्रद्धाक्रियामतिः ॥ बुद्धिर्लज्जावपुःशांतिस्तुष्टिःकांतिस्तुमातरः ॥
एतास्त्वामभिषिंचंतुदेवपत्न्यःसमागताः ॥ आदित्यश्चन्द्रमाभौमोबुधजीवसितार्कजाः ॥ ग्रहास्त्वाम
भिषिंचंतुराहुकेतुश्चतर्पिताः ॥ देवदानवगंधर्वायक्षराक्षसपन्नगाः ॥ ऋषयोमनवोगावोदेवमातरएवच ॥
देवपत्न्योद्रुमानागादैत्याश्चाप्सरसांगणाः ॥ अस्त्राणिसर्वशस्त्राणिराजानोवाहनानिच ॥ औषधानिच
रत्नानिकालस्यावयवाश्चये ॥ सरितःसागराःशैलास्तीर्थानिजलदानदाः ॥ एतेत्वामभिषिंचंतुसर्वका 
मार्थसिद्धये ॥ शांतिरस्तुपुष्टिरस्तु तुष्टिरस्तुअविघ्नमस्तुआयुष्याभिवृद्धिरस्तुसर्वेजनाः सुखिनोभवं

तुअमृताभिषेकोऽस्तु ॥ घटिकाजलाभिवंदनंघटिकाविसर्जनम् ॥ अथदाताजलंगृहीत्वादेशकालकी
र्तनांतेअनेनकन्यादानाख्येनकर्मणाश्रीलक्ष्मीनारायणः प्रीयताम् ॥ इतिकन्यादानप्रयोगपूजावि
धिगोत्रपाठाः ॥ अथाक्षतारोपणम् ॥ आयुर्दात्रएधि० रुद्रायत्वा० प्राणदात्रएधि० बृहस्पतयेत्वा०
त्वग्दाएधि० यमायत्वा० वयोदाएधि० कोदात्० निकामेनिकामेनः० प्रजामेकामःसमृध्यतां० य
शोमेकामःसमृध्यतां० अक्षन्नमिमदंत ह्यवप्रियाअधूषत ॥ अस्तोषतस्वभानवोविप्रानविष्ठयामती
योजान्विंद्रतेहरी ॥ इतिमंत्रेणवधूवरयोःपरस्परमक्षतारोपणम् ॥ ततोवरः देशकालकीर्तनांते ॥ म
मवध्वाश्चब्रह्मायुष्यप्राप्त्यर्थंगणपतिपूजनमहंकरिष्ये ॥ इतिसंकल्प्य ॥ एकस्मिन्पात्रेपूगीफलद्वयं
संस्थाप्यतत्रगणेशंपूजयेत् ॥ ॐ गणानांत्वागणपतिᳪंहवामहेप्रियाणांत्वाप्रियपतिᳪंहवामहेनिधीनां
त्वानिधिपति ᳪं हवामहेवसोमम ॥ आहमजानि गर्भधमात्वमजासिगर्भधम् ॥ इतिमंत्रेणोभौदंपती
आवाहनादिपूजां कुर्वीयाताम् ॥ तत्रैवसौभाग्यद्रव्याणिलड्डुकहरिद्राकंदद्वयंजीरकंलवणंएतानिनि

धायप्रार्थयेत् ॥ विघ्नानिनाशमायांतुसर्वाणिसुरनायक ॥ कार्यंमेसिद्धिमायातुप्रसन्नेत्वयिधातरि ॥ 

इत्युक्त्वा नमस्कारःकार्यः ॥ ततःपरस्परांचलयोः सौभाग्यद्रव्यसमेतंपूगस्थगणेशंवधूवरौपरस्परं



बध्नीयाताम् ॥ ततःपरस्परनमस्करणम् ॥ ततस्तांबूलपत्रेणमुखोच्छिष्टकरणम् ॥ अथगौरीपूजनं ॥

ततोदंपतीगौर्यायतनंव्रजेताम् ॥ तत्रस्वासनेयथोचितेउपविश्यततः कन्यकाहस्तेअक्षतोदकंदत्त्वाक

न्याच अस्मिन्पुण्याहे ममअनेनभर्त्रासहसुसौभाग्यपुत्रपौत्रादिसकलकामावाप्त्यर्थं श्रीगौरीशंकर

प्रीत्यर्थंयथामिलितोपचारद्रव्यैः श्रीगौरीशंकरपूजनमहंकरिष्ये ॥ इतिसंकल्प्य ॥ नमोदेव्यैमहादेव्यै

शिवायैसततंनमः ॥ नमःप्रकृत्यै भद्रायैनियताःप्रणताः स्मताम् ॥ अनेनमंत्रेणआवाहनादिपूजांकु

र्यात् ॥ गौरीशंकराभ्यामितिसर्वत्रपूजने ॥ ततोलौकिकरूढ्यनुसारान्मण्डपैककोणस्थं जलपूर्णघ ॥२१॥

टसमीपआरोपितंआम्रतरुंसिंचेत् । तच्चलग्नदिनप्रभृतिपंचदिनपर्यंतंकुर्यात् एवमेवगणेशपूजनाद्य

पिप्रत्यहंकुर्यात् ॥ गौरीसमीपस्थलेशचींचषोडशोपचारैःसंपूज्यप्रार्थयेत ॥ त्रैलोक्यवल्लभांदिव्यगं

धमाल्यांबरान्विताम् ॥ सर्वलक्षणसंयुक्तांसर्वाभरणभूषिताम् ॥ विलासिनीसहस्रोघैःसेव्यमानामह
र्निशम् ॥ एवंविधांशचींतत्रपूजयेत्प्रार्थयेत्ततः ॥ देवेंद्राणिनमस्तुभ्यंदेवेंद्रप्रियभामिनि ॥ विवाहं
भाग्यमारोग्यंपुत्रलाभंधनंतथा ॥ धान्यंदेहिमहादेविपशून्देहींद्रभामिनि ॥ यशोदेहिसुखंदेहिसर्वं
कार्यंकरी भव ॥ ततोवरःश्वशुरेणसंकल्प्यदत्तांवधूंप्रतिग्रहविधिनाप्रतिगृह्यतस्याहस्तंगृहीत्वा कन्या
दानस्थलादग्निसमीपम् ॥ ॐ यदैषिमनसादूरंदिशोनुपवमानोवा ॥ हिरण्यपर्णोवैकर्णःसत्वामन्मन
सांकरोमि ॥ इतिमंत्रंपठित्वा ॥ अमुकेआयाहिमयासह ॥ इति वधूंसंबोध्यवेदीसमीपंगच्छेत् ॥ त
तस्तौदंपतीदक्षिणपादेनवेदीमारुह्यअग्निंप्रदक्षिणीकृत्यअग्नेः पश्चिमभागेतृणपूलकेदक्षिणपादंदत्त्वा
तूष्णींकुशयुक्तएकस्मिन्नेवासने उपविशेताम् ॥ तत्रहिवरस्यदक्षिणतोवधूरुपविशेत् ॥ तदवसरेक
श्चित्पुरुषोवेद्याएकस्मिन्प्रदेशेअधोभागेमस्तकोपरिजलपूर्णसुकलशंधारयंस्तिष्ठेत् ॥ अथवधूपि
तावधूवरौप्रतिपरस्परंनिरीक्षेथामितिप्रैषंकुर्यात् ॥ ततोवरः ॥ ॐ अघोरचक्षुरपतिघ्न्येऽधि शि

वापशुभ्यः सुमनाःसुवर्चाः ॥ वीरसूर्देवकामास्योनाशंनोभवद्विपदेशंचतुष्पदे ॥ सोमः प्रथमोविवि
देगंधर्वोविविदउत्तरः ॥ तृतीयोऽग्निष्टेपतिस्तुरीयस्तेमनुष्यजः ॥ सोमोददद्गंधर्वाय गन्धर्वोददद्ग्नये
रयिंचपुत्रांश्चादादग्निर्मह्यमथोइमाम् ॥ सानःपूषाशिवतमामेरयसानऊरूउशतीविहरह ॥ यस्यामु
शंतःप्रहरामशेपंयस्यामुकामाबहवोनिविष्ट्यै ॥ इतिचतुरोमन्त्रान्पठित्वावरोवधूमवलोकयेत् ॥ व
धूरपिवरमवलोकयेत् ॥ अथविवाहहोमप्रयोगः ॥ ततोवरःआचम्यप्राणानायम्यदेशकालौसंकीर्त्य
अस्मिन्पुण्याहे अस्याःवध्वाःभार्यात्वसंपादनार्थं धर्मार्थकामप्रजासिद्ध्यर्थं विवाहहोममहं करिष्ये
तदंगतयाक्रमप्राप्त्यर्थंवैकल्पिकपदार्थस्मरणमहंकरिष्ये ॥ इतिसंकल्प्य ॥ तत्रादौऋष्यादिस्मरणं
करिष्ये ॥ आघाराज्यभागहोममंत्राणांपरमेष्ठीप्रजापतिर्ऋषिः ॥ लिंगोक्तादेवताः ॥ भूर्भुवः स्वरिति ॥२२॥
महाव्याहृतीनांप्रजापतिर्ऋषिः ॥ गायत्र्युष्णिगनुष्टुप्छंदांसि ॥ अग्निर्वायुःसूर्योदेवताः ॥ त्वंनः०
सत्वंनः० अयाश्चाग्ने० येतेशतं० इतिमंत्राणांवामदेवऋषिः ॥ त्रिष्टुप्छंदः ॥ प्रथमयोरग्नीवरुणौदेवते

तृतीयस्याग्निर्देवता ॥ चतुर्थस्यवरुणसवितृविष्णुविश्वेदेवमरुत्स्वर्कादेवताः ॥ उदुत्तममितिशुनः
शेपऋषिः ॥ त्रिष्टुप्छंदः ॥ वरुणोदेवता ॥ राष्ट्रभृन्मंत्राणांसर्वेषांप्रजापतिर्ऋषिः ॥ सर्वाणियजूंषि
च्छंदांसि ॥ लिंगोक्तादेवताः ॥ चित्तिंचेत्यादिद्वादशमंत्राणांपरमेष्ठीऋषिः ॥ त्रिष्टुप्छंदः लिंगोक्तादे
वताः ॥ अग्निर्भूतानामित्यादिद्वाविंशतिमंत्राणांप्रजापतिर्ऋषिः ॥ त्रिष्टुप्छंदः ॥ लिंगोक्तादेवताः ॥
परंमृत्युरितिमंत्रस्य संकुशकऋषिः ॥ अनुष्टुप्छंदः ॥ अग्निर्देवता ॥ भूरित्यादियावन्मंत्राणांहवनेवि
नियोगः ॥ गृभ्णामितिमंत्रस्ययाज्ञवल्क्यऋषिः ॥ त्रिष्टुप्छंदः ॥ अमोहमितिमंत्रस्यभरद्वाजऋषिः
उष्णिक्छंदः ॥ तावेहीतिमंत्रस्यआथर्वणऋषिः ॥ अनुष्टुप्छंदः ॥ तेसंत्वितिमंत्रस्यप्रजापतिर्ऋषिः
यजुश्छंदः ॥ चतुर्णामपिभगाद्यादेवताः पाणिग्रहणे विनियोगः ॥ आरोहेममितिमंत्रस्यआथर्वणऋषिः
अनुष्टुप्छंदः ॥ वधूर्देवता ॥ दृषदारोहणेविनियोगः ॥ सरस्वतिप्रेदमवमितिमंत्रस्यविश्वावसु
ऋषिः ॥ अनुष्टुप्छंदः ॥ सरस्वतीदेवता ॥ जपेविनियोगः ॥ तुभ्यमितिमंत्रस्यप्रजापतिर्ऋ

षिः ॥ अनुष्टुप्छंदः ॥ अग्निर्देवता ॥ परिक्रमणेविनियोगः ॥ आपः शिवाइतिमंत्रस्यप्रजा
पतिर्ऋषिः ॥ यजुश्छंदः ॥ लिंगोक्तादेवताः ॥ आपोहिष्ठेतितिसृणांसिंधुद्वीपऋषिः ॥ गाय
त्रीच्छंदः ॥ आपोदेवताः ॥ मूर्धाभिषेकेविनियोगः ॥ तच्चक्षुरितिमंत्रस्यदध्यङ्ङाथर्वणऋषिः ॥
पुरउष्णिक्छंदः ॥ सूर्योदेवता ॥ सूर्यावेक्षणेविनियोगः ॥ ममव्रतेतइतिमंत्रस्यप्रजापतिर्ऋषिः ॥ त्रि
ष्टुप्छंदः ॥ प्रजापतिर्देवता ॥ हृदयालंभनेविनियोगः ॥ सुमंगलीरितिमंत्रस्यप्रजापतिर्ऋषिः ॥ अनु
ष्टुप्छंदः ॥ वधूर्देवताः ॥ अभिमंत्रणेविनियोगः ॥ इहगावइतिमंत्रस्यप्रजापतिर्ऋषिः ॥ अनुष्टुप्छंदः ॥
लिंगोक्तादेवता ॥ अनडुच्चर्मण्युपवेशनेविनियोगः ॥ ध्रुवमसीतिमंत्रस्यप्रजापतिर्ऋषिः ॥ पंक्तिश्छंदः ॥
लिंगोक्तादेवता ॥ ध्रुवावेक्षणेविनियोगः ॥ इतिऋष्यादिस्मरणम् ॥ अथैतेवैकल्पिकपदार्थाः ॥ अ 
स्मिन्नन्वाहितेऽग्नौपूर्वेणब्रह्मणोगमनम् ॥ उत्तरतःपात्रासादनम् ॥ द्वेपवित्रे ॥ कांस्यमयीताम्रमयीवा
ज्यस्थाली ॥ पालाश्यःसमिधः ॥ प्रांच्यावाघारौ ॥ समिद्धतमेआज्यभागौ ॥ पूर्णपात्रम् ॥ दक्षिणा ॥

आवयोस्त्रिरात्रब्रह्मचर्यम् ॥ शमीपलाशमिश्रालाजाः ॥ अश्मा ॥ लोहितमानडुहंचर्म ॥ तदभा
वेबार्हिः ॥ कुमार्याभ्राता ॥ शूर्पं ॥ दृढपुरुषः ॥ उदकुंभः ॥ गौः ॥ गोरभावेनिष्क्रयद्रव्यम् ॥ एता
न्वैकल्पिकान्पदार्थान्संनिधापितानितिस्मरामि ॥ इतिस्मृत्वा ॥ अन्वाधानापरनामकंदेवताभिध्यानं
करोति ॥ तत्रसंकल्पः ॥ देशकालकीर्तनांते ॥ अस्मिन्विवाहहोमकर्मणिदेवतापरिग्रहार्थमन्वाधानं
करिष्ये ॥ इतिसंकल्प्यपाणिनासमिद्द्वयमादाय ॥ प्रजापतिं । इंद्रं । अग्निं । सोमं । अग्निं । वायुं ।
सूर्यं । अग्नीवरुणौ । अग्नीवरुणौ । अग्निं । वरुणं । सवितारं । विष्णुं । विश्वान्देवान् । मरुतः ।
स्वर्कान् । वरुणं । ऋताषाढं । ऋतधामानं । अग्निं । गंधर्वं । ओषधीः । अप्सरसः । मुदः । स
हितं । विश्वसामानं । सूर्यं । गंधर्वं । मरीचीन् । अप्सरसः । आयुवः । सुषुम्णं । सूर्यरश्मिं । चं
द्रमसं । गंधर्वं । नक्षत्राणि । अप्सरसः । भेकुरीः । इषिरं । विश्वव्यचसं । वातं । गंधर्वं ॥ आपः ।
अप्सरसः । ऊर्जं । भुज्युं । सुपर्णं । यज्ञं । गंधर्वं । दक्षिणाः । अप्सरसः । स्तावाः । प्रजापतिं । वि

विवा० श्वकर्माणं । मनसं । गंधर्वं । ऋक्सामानि । अप्सरसः । एष्टीः । चित्तं । चित्तिं । आकूतं । आकू पद्ध०
॥२४॥ तिं । विज्ञानं । विज्ञातं । मनः । शक्करीः । दर्शं । पौर्णमासं । बृहतं । रथंतरं । प्रजापतिं । अग्निं
भूतानामधिपतिं । इंद्रं ज्येष्ठानामधिपतिं । यमं पृथिव्याअधिपतिं । वायुं अंतरिक्षस्याधिपति ।
सूर्यं दिवोऽधिपतिं । चंद्रमसं नक्षत्राणामधिपतिं । बृहस्पतिं ब्रह्मणोऽधिपतिं । मित्रं सत्यानामधि
पतिं । वरुणं अपामधिपतिं । समुद्रं स्रोत्यानामधिपतिं । अन्नं साम्राज्यानामधिपतिं । सोमं ओष
धीनामधिपतिं । सवितारं प्रसवानामधिपतिं । रुद्रं पशूनामधिपतिं । उदकोपस्पर्शनम् । त्वष्टारं रू
पाणामधिपतिं । विष्णुं पर्वतानामधिपतिं । मरुतः गणानामधिपतीन् । पितॄन् । पितामहान् । व
रान् । ततान् । ततामहान् ॥ उदकोपस्पर्शः ॥ अग्निं । अग्निं । अग्निं । वैवस्वतं । मृत्युं ॥ उदको
परस्पर्शनम् ॥ एताः सर्वादेवताआज्यद्रव्येण ॥ अग्निं त्रिस्त्रिर्लाजैः भगं । सकृल्लाजैः ॥ प्रजापतिं । ॥२४॥
अग्निं । स्विष्टकृतं । एताः पुनराज्येन । एतादेवताअंगप्रधानार्थाअस्मिन्कर्मण्यहंयक्ष्ये ॥ पात्रा

सादनम् ॥ तत्रब्रह्मणोवरणम् ॥ अमुकप्रवरान्वितामुकसगोत्रामुकशर्मन्नस्मिन्विवाहांगहोमेत्वंब्रह्मा
भव ॥ त्रिप्रश्न । भवामि । इत्युक्त्वास्वासनउपविशेत् ॥ एवंदक्षिणतोब्रह्माणंस्थापयित्वा उत्तरतः
प्रणीतासनम् ॥ वायव्यां द्वितीयमासनं ॥ ततोवामकरेणप्रणीताः संगृह्य दक्षिणकरेणजलंप्र
पूर्यभूमौवायव्यासनेनिधायालभ्योत्तरतोऽग्नेःस्थापनम् ॥ बर्हिषाप्रदक्षिणमग्निंपरिस्तीर्यवाईशाना
दिपूर्वाग्रैस्त्रिभिस्त्रिभिर्दर्भैः परिस्तरणम् ॥ तच्चप्रागुदगग्रैः दक्षिणतःप्रागग्रैः प्रत्यगुदगग्रैःउत्तरतःप्रा
गग्रैः अथैतत्पात्रासादनम् ॥ पवित्रच्छेदनदर्भास्त्रयः ॥ पवित्रेद्वे ॥ प्रोक्षणीपात्रम् ॥ आज्यस्थाली
संमार्गकुशाःपंच ॥ उपयमनकुशाःसप्त ॥ समिधस्तिस्रः ॥ स्रुवः ॥ आज्यं ॥ तंदुलाः ॥ पूर्णपात्रे ॥
दक्षिणा ॥ पवित्रच्छेदनैः पवित्रीकरणं ॥ द्वयोः पवित्रयोरुपरिपवित्रत्रयंनिधाय ॥ द्वयोर्मूलेनद्वौकु
शौप्रदक्षिणीकृत्यत्रयाणांमूलाग्रेएकीकृत्यअनामिकांगुष्ठेनद्वयोरग्रंछेदयेत् ॥ द्वयोर्मूलंत्रीणिचोत्तरतः
क्षिपेत् ॥ प्रोक्षणीपात्रेप्रणीतोदकंपात्रांतरेणचतुर्वारमुदकमासिंचेत् ॥ वामकरेपवित्राग्रंदक्षिणेमूलं

धृत्वामध्यतः पवित्राभ्यामुत्पवनंप्रोक्षणीपात्रजलस्येति ॥ प्रोक्षणीनांसव्यहस्तेकरणम् ॥ दक्षिणह
स्तमुत्तानंकृत्वामध्येऽनामिकांगुलयोर्मध्यपर्वभ्यामपामुद्दिङ्गनम् ॥ प्रणीतोदकेनप्रोक्षणीनांप्रोक्षणम् ॥
प्रोक्षण्युदकेनाज्यस्थाल्याः प्रोक्षणम् ॥ संमार्गकुशानांप्रोक्षणम् ॥ उपयमनकुशानांप्रोक्षणम् ॥ स
मिधांप्रोक्षणम् ॥ स्रुवस्य प्रोक्षणम् ॥ आज्यस्यप्रोक्षणम् ॥ पूर्णपात्रस्यप्रोक्षणम् ॥ प्रणीताग्न्योर्मध्ये
असंचरेप्रोक्षणीनिधानम् ॥ आज्यस्थाल्यामाज्यनिर्वापः ॥ ब्रह्मणोदक्षिणतआज्याधिश्रयणम् ॥
ज्वलितोल्मुकेनपर्यग्निकरणम् ॥ स्रुवस्यप्रतपनम् ॥ संमार्गकुशैःस्रुवस्य संमार्जनम् ॥ अग्रैरग्रंमूलै
र्मूलम् ॥ प्रणीतोदकेनाभ्युक्षणम् ॥ पुनःप्रतपनम् ॥ देशे निधानम् ॥ आज्योद्वासनम् ॥ प्रत्युत्प
वनवत्पवित्रेणोत्पवनम् ॥ अवेक्षणम् ॥ अपद्रव्यनिरसनम् ॥ प्रोक्षण्याःप्रत्युत्पवनम् ॥ उपयमनकु
शानादायतिष्ठन्त्समिधोऽभ्यादाय ॥ प्रोक्षण्युदकशेषेणसपवित्रस्तेनाग्नेरीशानकोणादारभ्यप्रदक्षि
णवत्पर्युक्षणम् ॥ पवित्रयोःप्रणीतासुनिधानम् ॥ दक्षिणंजान्वाच्यजुहोति ॥ तत्राघारावाज्यभागौ

चवस्त्रान्वारब्धः स्रुवेणजुहुयात् ॥ मृगीमुद्रयाघृतस्रुवेणाज्यमादायप्रजापतिं मनसाध्यात्वास्वाहाकार मुच्चैःइदंप्रजापतयेनममेत्युच्चैरुच्चारयेत् ॥ अग्नेरुत्तरभागे ॥ ॐ प्रजापतयेस्वाहाइदंप्रजापतयेनमम ॥ अग्नेर्दक्षिणभागे ॥ ॐ इंद्रायस्वाहाइदमिंद्रायनमम ॥ इत्याघारौ ॥ मध्येसमिद्धतमेचाज्यभागौ ॥ ॐ अग्नयेस्वाहाइदमग्नयेन मम ॥ ॐ सोमायस्वाहाइदंसोमायनमम ॥ ततोवरेणद्रव्यत्यागः कार्यःस यथा ॥ वरःहस्तेजलंगृहीत्वा ॥ इदंसंपादितद्रव्यंयथायथक्ष्यमाणदेवताभ्यस्ताभ्यस्ताभ्यउत्सृष्टंनममइति संकल्प्यहवनीयद्रव्यमुत्सृजेत् ॥ अथभूराद्याःप्रायश्चित्ताष्टाहुतयः ॥ ॐ भूःस्वाहाइदमग्नयेनमम ॥ ॐ भुवःस्वाहाइदंवायवेनमम ॥ ॐ स्वःस्वाहाइदं सूर्यायनमम ॥ ॐ त्वंनोअग्नेवरुणस्यविद्वान्देव स्यहेडोअवयासिसीष्ठाः ॥ यजिष्ठोवह्नितमःशोशुचानोविश्वाद्वेषाꣳसिप्रमुमुग्ध्यस्मत्स्वाहा ॥ इदम ग्नीवरुणाभ्यांनमम ॥ ॐ सत्वंनो अग्नेवमोभवोतीनेदिष्ठोअस्याउषसोव्युष्टौ ॥ अवयक्ष्वनोवरुणꣳ रराणोवीहिमृडीकꣳसुहवोनएधिस्वाहा ॥ इदमग्नीवरुणाभ्यांनमम ॥ ॐ अयाश्चाग्नेस्यनभिशस्तिपा

विवा० श्वसत्वमित्त्वमयाअसि ॥ अयानोयज्ञंवहास्ययानोधेहि भेषजꣳस्वाहा ॥ इदमग्नयेनमम ॥ ॐ येते पद्ध०
॥२६॥ शतंवरुणयेसहस्रंयज्ञियाः पाशावितता महांतः ॥ तेभिर्नोअद्यसवितोतविष्णुर्विश्वेमुंचंतुमरुतःस्व
र्काःस्वाहा ॥ इदं वरुणाय सवित्रेविष्णवे विश्वेभ्योदेवेभ्यो मरुद्भ्यःस्वर्केभ्यश्चनमम ॥ ॐ उदुत्तमं
वरुणपाशमस्मदवाधमंविमध्यमꣳश्रथाय ॥ अथावयमादित्यव्रतेतवानागसोअदितयेस्यामस्वा
हा ॥ इदंवरुणायादित्यायादितयेचनमम ॥ अथराष्ट्रभृद्धोमः ॥ ॐ ऋताषाडृतधामाग्निर्गन्धर्वःसनऽ
इदं ब्रह्मक्षत्रंपातुतस्मैस्वाहावाट् ॥ इदमृतसाहेऋतधाम्नेअग्नयेगंधर्वायनमम ॥ ॐ ऋताषाडृतधामा
ग्निर्गन्धर्वस्तस्यौषधयोऽप्सरसोमुदोनामताभ्यःस्वाहा ॥ इदमोषधीभ्योऽप्सरोभ्योमुद्भ्योनमम ॥
ॐ सꣳहितोविश्वसामासूर्योगन्धर्वः सन इदंब्रह्मक्षत्रं पातु तस्मै स्वाहावाट् ॥ इदं सꣳहिताय वि ॥२६॥
श्वसाम्ने सूर्यायगन्धर्वायनमम ॥ ॐ सꣳहितो विश्वसामा सूर्यो गन्धर्वस्तस्य मरीचयोऽप्सरस
आयुवो नाम ताभ्यः स्वाहा ॥ इदं मरीचिभ्योऽप्सरोभ्य आयुभ्यो नमम ॥ ॐ सुषुम्णः सूर्यरश्मि